# ॥ श्रीपार्वतीसहस्रनामस्तोत्रम् ॥

हिमवानुवाच ।
का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ।
न जाने त्वामहं वत्से यथावद् ब्रूहि पृच्छते ॥ १॥

गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार महाशैलं योगिनामभयप्रदा ॥ २॥

देव्युवाच ।
मां विद्धि परमां शक्तिं परमेश्वरसमाश्रयाम् ।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥ ३॥

अहं वै सर्वभावानामात्मा सर्वान्तरा शिवा ।
शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका ॥ ४॥

अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥ ५॥

एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ।
स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ॥ ६॥

कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ।
ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥ ७॥

दंष्ट्राकरालं दुर्द्धर्षं जटामण्डलमण्डितम् ।
त्रिशूलवरहस्तं च घोररूपं भयानकम् ॥ ८॥

प्रशान्तं सौम्यवदनमनन्ताश्चर्यसंयुतम् ।
चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥ ९॥

किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ १०॥

शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ।
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम् ॥ ११॥

सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् ।

ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ॥ १२॥

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वमावृत्य तिष्ठन्तं ददर्श परमेश्वरम् ॥ १३॥

दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ।
भयेन च समाविष्टः स राजा हृष्टमानसः ॥ १४॥

आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् ।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥ १५॥

हिमवानुवाच ।
शिवोमा परमा शक्तिरनन्ता निष्कलाऽमला ।
शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥ १॥

अचिन्त्या केवलाऽनन्त्या शिवात्मा परमात्मिका ।
अनादिरव्यया शुद्धा देवात्मा सर्वगाऽचला ॥ २॥

एकानेकविभागस्था मायातीता सुनिर्मला ।
महामाहेश्वरी सत्या महादेवी निरञ्जना ॥ ३॥

काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा ।
नन्दा सर्वात्मिका विद्या ज्योतीरूपाऽमृताक्षरा ॥ ४॥

शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ।
व्योममूर्तिर्व्योमलया व्योमाधाराऽच्युताऽमरा ॥ ५॥

अनादिनिधनाऽमोघा कारणात्मा कलाऽकला ।
क्रतुः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥ ६॥

प्राणेश्वरप्रिया माता महामहिषघातिनी ।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ ७॥

सर्वशक्तिकलाकारा ज्योत्स्ना द्यौर्महिमास्पदा ।
सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ॥ ८॥

अनादिरव्यक्तगुहा महानन्दा सनातनी ।
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी ॥ ९॥

महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी ।
संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥ १०॥

संसारपारा दुर्वारा दुर्निरीक्ष्या दुरासदा ।
प्राणशक्तिः प्राणविद्या योगिनी परमा कला ॥ ११॥

महाविभूतिर्दुर्द्धर्षा मूलप्रकृतिसंभवा ।
अनाद्यनन्तविभवा परार्था पुरुषारणिः ॥ १२॥

सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया ।
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥ १३॥

प्रधानपुरुषातीता प्रधानपुरुषात्मिका ।
पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी ॥ १४॥

भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता ।
जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ॥ १५॥

व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी ।
क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ॥ १६॥

अनादिमायासंभिन्ना त्रितत्त्वा प्रकृतिर्गुहा ।
महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ॥ १७॥

व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका ।
अकार्या कार्यजननी नित्यं प्रसवधर्मिणी ॥ १८॥

सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी ।
ब्रह्मगर्भा चतुर्विंशा पद्मनाभाऽच्युतात्मिका ॥ १९॥

वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया ।
सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ॥ २०॥

विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी ।
महीयसी ब्रह्मयोनिर्महालक्ष्मीसमुद्भवा ॥ २१॥

महाविमानमध्यस्था महानिद्रात्महेतुका ।

सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिका ॥ २२॥

अनन्तरूपाऽनन्तस्था देवी पुरुषमोहिनी ।
अनेकाकारसंस्थाना कालत्रयविवर्जिता ॥ २३॥

ब्रह्मजन्मा हरेर्मूर्तिर्ब्रह्मविष्णुशिवात्मिका ।
ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ॥ २४॥

व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी ।
वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदिस्थिता ।
अपांयोनिः स्वयंभूतिर्मानसी तत्त्वसंभवा ॥ २५॥

ईश्वराणी च शर्वाणी शंकरार्द्धशरीरिणी ।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका ॥ २६॥

महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ।
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा ॥ २७॥

ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी ।
ईश्वरार्द्धासनगता महेश्वरपतिव्रता ॥ २८॥

सकृद्विभाविता सर्वा समुद्रपरिशोषिणी ।
पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥ २९॥

गुणाढ्या योगजा योग्या ज्ञानमूर्तिर्विकासिनी ।
सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता ॥ ३०॥

सरोजनिलया मुद्रा योगनिद्रा सुरार्दिनी ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला ॥ ३१॥

वाग्देवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका ।
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना ॥ ३२॥

गुह्यविद्यात्मविद्या च धर्मविद्यात्मभाविता ।
स्वाहा विश्वंभरा सिद्धिः स्वधा मेधा धृतिः श्रुतिः ॥ ३३॥

नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी ।
अजा विभावरी सौम्या भोगिनी भोगदायिनी ॥ ३४॥

शोभा वंशकरी लोला मालिनी परमेष्ठिनी ।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ॥ ३५॥

महानुभावा सत्त्वस्था महामहिषमर्दनी ।
पद्ममाला पापहरा विचित्रा मुकुटानना ॥ ३६॥

कान्ता चित्राम्बरधरा दिव्याभरणभूषिता ।
हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ॥ ३७॥

निर्यन्त्रा यन्त्रवाहस्था नन्दिनी भद्रकालिका ।
आदित्यवर्णा कौमारी मयूरवरवाहिनी ॥ ३८॥

वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्री पद्मगर्भा विवाहना ॥ ३९॥

विरूपाक्षी लेलिहाना महापुरनिवासिनी ।
महाफलाऽनवद्याङ्गी कामपूरा विभावरी ॥ ४०॥

विचित्ररत्नमुकुटा प्रणतार्तिप्रभञ्जनी ।
कौशिकी कर्षणी रात्रिस्त्रिदशार्त्तिविनाशिनी ॥ ४१॥

बहुरूपा सुरूपा च विरूपा रूपवर्जिता ।
भक्तार्तिशमनी भव्या भवभावविनाशिनी ॥ ४२॥

निर्गुणा नित्यविभवा निःसारा निरपत्रपा ।
यशस्विनी सामगीतिर्भवाङ्गनिलयालया ॥ ४३॥

दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ।
सर्वातिशायिनी विद्या सर्वसिद्धिप्रदायिनी ॥ ४४॥

सर्वेश्वरप्रिया तार्क्ष्या समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ ४५॥

कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ।
निःसङ्कल्पा निरातङ्का विनया विनयप्रदा ॥ ४६॥

ज्वालामाला सहस्राढ्या देवदेवी मनोन्मनी ।

महाभगवती दुर्गा वासुदेवसमुद्भवा ॥ ४७॥

महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा ।
ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥ ४८॥

दक्षिणा दहना दाह्या सर्वभूतनमस्कृता ।
योगमाया विभावज्ञा महामाया महीयसी ॥ ४९॥

संध्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रयानतिः ।
बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ ५०॥

ख्यातिः प्रज्ञा चितिः संवित् महाभोगीन्द्रशायिनी ।
विकृतिः शांकरी शास्त्री गणगन्धर्वसेविता ॥ ५१॥

वैश्वानरी महाशाला देवसेना गुहप्रिया ।
महारात्रिः शिवानन्दा शची दुःस्वप्ननाशिनी ॥ ५२॥

इज्या पूज्या जगद्धात्री दुर्विज्ञेया सुरूपिणी ।
गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ॥ ५३॥

हव्यवाहान्तरागादिः हव्यवाहसमुद्भवा ।
जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ॥ ५४॥

बुद्धिमाता बुद्धिमती पुरुषान्तरवासिनी ।
तरस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ ५५॥

सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता ।
संसारतारिणी विद्या ब्रह्मवादिमनोलया ॥ ५६॥

ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणिः ।
हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ॥ ५७॥

सुमालिनी सुरूपा च भाविनी तारिणी प्रभा ।
उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥ ५८॥

सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ।
सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ॥ ५९॥

जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ।
निराश्रया निराहारा निरङ्कुरवनोद्भवा ॥ ६०॥

चन्द्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी ।
परावरविधानज्ञा महापुरुषपूर्वजा ॥ ६१॥

विद्येश्वरप्रिया विद्या विद्युज्जिह्वा जितश्रमा ।
विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ॥ ६२॥

सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया ।
क्षालिनी सन्मयी व्याप्ता तैजसी पद्मबोधिका ॥ ६३॥

महामायाश्रया मान्या महादेवमनोरमा ।
व्योमलक्ष्मीः सिंहरथा चेकितानाऽमितप्रभा ॥ ६४॥

वीरेश्वरी विमानस्था विशोका शोकनाशिनी ।
अनाहता कुण्डलिनी नलिनी पद्मवासिनी ॥ ६५॥

सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता ।
वाग्देवता ब्रह्मकला कलातीता कलारणिः ॥ ६६॥

ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ।
व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परागतिः ॥ ६७॥

क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ।
अभिन्नाभिन्नसंस्थाना वंशिनी वंशहारिणी ॥ ६८॥

गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ।
भगिनी भगवत्पत्नी सकला कालकारिणी ॥ ६९॥

सर्ववित् सर्वतोभद्रा गुह्यातीता गुहारणिः ।
प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ॥ ७०॥

कपिला कापिला कान्ता कनकाभा कलान्तरा ।
पुण्या पुष्करिणी भोक्त्री पुरंदरपुरस्सरा ॥ ७१॥

पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ।
पञ्चब्रह्मसमुत्पत्तिः परमार्थार्थविग्रहा ॥ ७२॥

धर्मोदया भानुमती योगिज्ञेया मनोजवा ।
मनोहरा मनोरक्षा तापसी वेदरूपिणी ॥ ७३॥

वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ।
योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ॥ ७४॥

विश्वावस्था वियन्मूर्त्तिर्विद्युन्माला विहायसी ।
किंनरी सुरभी वन्द्या नन्दिनी नन्दिवल्लभा ॥ ७५॥

भारती परमानन्दा परापरविभेदिका ।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥ ७६॥

अचिन्त्याऽचिन्त्यविभवा हृल्लेखा कनकप्रभा ।
कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धदायिनी ॥ ७७॥

त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ॥ ७८॥

शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना ।
आद्या हृत्कमलोद्भूता गवां माता रणप्रिया ॥ ७९॥

सत्क्रिया गिरिजा शुद्धा नित्यपुष्टा निरन्तरा ।
दुर्गाकात्यायनी चण्डी चर्चिका शान्तविग्रहा ॥ ८०॥

हिरण्यवर्णा रजनी जगद्यन्त्रप्रवर्तिका ।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ॥ ८१॥

रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ।
पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ॥ ८२॥

धुन्वती दुःप्रकम्प्या च सूर्यमाता दृषद्वती ।
महेन्द्रभगिनी मान्या वरेण्या वरदर्पिता ॥ ८३॥

कल्याणी कमला रामा पञ्चभूता वरप्रदा ।
वाच्या वरेश्वरी वन्द्या दुर्जया दुरतिक्रमा ॥ ८४॥

कालरात्रिर्महावेगा वीरभद्रप्रिया हिता ।

भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥ ८५॥

कराला पिङ्गलाकारा नामभेदाऽमहामदा ।
यशस्विनी यशोदा च षडध्वपरिवर्त्तिका ॥ ८६॥

शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ।
चैत्रा संवत्सरारूढा जगत्संपूरणीन्द्रजा ॥ ८७॥

शुम्भारिः खेचरी स्वस्था कम्बुग्रीवा कलिप्रिया ।
खगध्वजा खगारूढा परार्ध्या परमालिनी ॥ ८८॥

ऐश्वर्यवर्त्मनिलया विरक्ता गरुडासना ।
जयन्ती हृद्गुहा रम्या गह्वरेष्ठा गणाग्रणीः ॥ ८९॥

संकल्पसिद्धा साम्यस्था सर्वविज्ञानदायिनी ।
कलिकल्मषहन्त्री च गुह्योपनिषदुत्तमा ॥ ९०॥

निष्ठा दृष्टिः स्मृतिर्व्याप्तिः पुष्टिस्तुष्टिः क्रियावती ।
विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवाऽमृता ॥ ९१॥

लोहिता सर्पमाला च भीषणी वनमालिनी ।
अनन्तशयनाऽनन्या नरनारायणोद्भवा ॥ ९२॥

नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा ।
संकर्षणसमुत्पत्तिरम्बिकापादसंश्रया ॥ ९३॥

महाज्वाला महामूर्त्तिः सुमूर्त्तिः सर्वकामधुक् ।
सुप्रभा सुस्तना गौरी धर्मकामार्थमोक्षदा ॥ ९४॥

भ्रूमध्यनिलया पूर्वा पुराणपुरुषारणिः ।
महाविभूतिदा मध्या सरोजनयना समा ॥ ९५॥

अष्टादशभुजाऽनाद्या नीलोत्पलदलप्रभा ।
सर्वशक्त्यासनारूढा धर्माधर्मार्थवर्जिता ॥ ९६॥

वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ।
विचित्रगहनाधारा शाश्वतस्थानवासिनी ॥ ९७॥

स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ।
अशेषदेवतामूर्त्तिर्देवता वरदेवता ।
गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ॥ ९८॥

अवर्णा वर्णरहिता निवर्णा बीजसंभवा ।
अनन्तवर्णाऽनन्यस्था शंकरी शान्तमानसा ॥ ९९॥

अगोत्रा गोमती गोप्त्री गुह्यरूपा गुणोत्तरा ।
गौर्गीर्गव्यप्रिया गौणी गणेश्वरनमस्कृता ॥ १००॥

सत्यमात्रा सत्यसंधा त्रिसंध्या संधिवर्जिता ।
सर्ववादाश्रया संख्या सांख्ययोगसमुद्भवा ॥ १०१॥

असंख्येयाऽप्रमेयाख्या शून्या शुद्धकुलोद्भवा ।
बिन्दुनादसमुत्पत्तिः शंभुवामा शशिप्रभा ॥ १०२॥

विसङ्गा भेदरहिता मनोज्ञा मधुसूदनी ।
महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता ॥ १०३॥

त्रितत्त्वमाता त्रिविधा सुसूक्ष्मपदसंश्रया ।
शान्त्यतीता मलातीता निर्विकारा निराश्रया ॥ १०४॥

शिवाख्या चित्तनिलया शिवज्ञानस्वरूपिणी ।
दैत्यदानवनिर्मात्री काश्यपी कालकल्पिका ॥ १०५॥

शास्त्रयोनिः क्रियामूर्तिश्चतुर्वर्गप्रदर्शिका ।
नारायणी नरोद्भूतिः कौमुदी लिङ्गधारिणी ॥ १०६॥

कामुकी ललिता भावा परापरविभूतिदा ।
परान्तजातमहिमा बडवा वामलोचना ॥ १०७॥

सुभद्रा देवकी सीता वेदवेदाङ्गपारगा ।
मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ १०८॥

अमृत्युरमृता स्वाहा पुरुहूता पुरुष्टुता ।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया ॥ १०९॥

हिरण्या राजती हैमी हेमाभरणभूषिता ।

विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ ११०॥

महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता ।
दीर्घा ककुद्मिनी हृद्या शान्तिदा शान्तिवर्द्धिनी ॥ १११॥

लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका ।
त्रिशक्तिजननी जन्या षडूर्मिपरिवर्जिता ॥ ११२॥

सुधामा कर्मकरणी युगान्तदहनात्मिका ।
संकर्षणी जगद्धात्री कामयोनिः किरीटिनी ॥ ११३॥

ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ।
प्रद्युम्नदयिता दान्ता युग्मदृष्टिस्त्रिलोचना ॥ ११४॥

मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ।
वृषावेशा वियन्माता विन्ध्यपर्वतवासिनी ॥ ११५॥

हिमवन्मेरुनिलया कैलासगिरिवासिनी ।
चाणूरहन्तृतनया नीतिज्ञा कामरूपिणी ॥ ११६॥

वेदविद्याव्रतस्नाता धर्मशीलाऽनिलाशना ।
वीरभद्रप्रिया वीरा महाकालसमुद्भवा ॥ ११७॥

विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः ।
आप्यायनी हरन्ती च पावनी पोषणी खिला ॥ ११८॥

मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ।
करीषिणी सुधावाणी वीणावादनतत्परा ॥ ११९॥

सेविता सेविका सेव्या सिनीवाली गुरुत्मती ।
अरुन्धती हिरण्याक्षी मृगाङ्का मानदायिनी ॥ १२०॥

वसुप्रदा वसुमती वसोर्द्धारा वसुंधरा ।
धाराधरा वरारोहा वरावरसहस्रदा ॥ १२१॥

श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया ।
श्रीधरा श्रीकरी कल्या श्रीधरार्द्धशरीरिणी ॥ १२२॥

अनन्तदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ।
निहन्त्री दैत्यसङ्घानां सिंहिका सिंहवाहना ॥ १२३॥

सुषेणा चन्द्रनिलया सुकीर्तिश्छिन्नसंशया ।
रसज्ञा रसदा रामा लेलिहानाऽमृतस्रवा ॥ १२४॥

नित्योदिता स्वयंज्योतिरुत्सुका मृतजीवनी ।
वज्रदण्डा वज्रजिह्वा वैदेही वज्रविग्रहा ॥ १२५॥

मङ्गल्या मङ्गला माला मलिना मलहारिणी ।
गान्धर्वी गारुडी चान्द्री कम्बलाश्वतरप्रिया ॥ १२६॥

सौदामिनी जनानन्दा भ्रुकुटीकुटिलानना ।
कर्णिकारकरा कक्ष्या कंसप्राणापहारिणी ॥ १२७॥

युगंधरा युगावर्त्ता त्रिसंध्या हर्षवर्द्धनी ।
प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवापरा ॥ १२८॥

शक्रासनगता शाक्री साध्वी नारी शवासना ।
इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ॥ १२९॥

शतरूपा शतावर्त्ता विनता सुरभिः सुरा ।
सुरेन्द्रमाता सुद्युम्ना सुषुम्ना सूर्यसंस्थिता ॥ १३०॥

समीक्ष्या सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा ।
धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ॥ १३१॥

धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ।
धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी ॥ १३२॥

धर्मान्तरा धर्ममेघा धर्मपूर्वा धनावहा ।
धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा ॥ १३३॥

कापाली शाकला मूर्त्तिः कला कलितविग्रहा ।
सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया ॥ १३४॥

सर्वा सर्वेश्वरी सूक्ष्मा सुसूक्ष्मा ज्ञानरूपिणी ।
प्रधानपुरुषेशेशा महादेवैकसाक्षिणी ।

सदाशिवा वियन्मूर्त्तिर्विश्वमूर्त्तिरमूर्त्तिका ॥ १३५॥

एवं नाम्नां सहस्रेण स्तुत्वाऽसौ हिमवान् गिरिः ।
भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृताञ्जलिः ॥ १॥

यदेतदैश्वरं रूपं घोरं ते परमेश्वरि ।
भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत् प्रदर्शय ॥ २॥

एवमुक्ताऽथ सा देवी तेन शैलेन पार्वती ।
संहृत्य दर्शयामास स्वरूपमपरं पुनः ॥ ३॥

नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धिकम् ।
द्विनेत्रं द्विभुजं सौम्यं नीलालकविभूषितम् ॥ ४॥

रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ।
श्रीमद् विशालसंवृत्तललाटतिलकोज्ज्वलम् ॥ ५॥

भूषितं चारुसर्वाङ्गं भूषणैरतिकोमलम् ।
दधानमुरसा मालां विशालां हेमनिर्मिताम् ॥ ६॥

ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् ।
प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ॥ ७॥

तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ।
भीतिं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ॥ ८॥

॥ इति श्रीकूर्मपुराणे पार्वती सहस्रनाम स्तोत्रम् सम्पूर्णम् ॥